नारदः—

आकर्ण्य वार्तामभरेश्वराणां
आगच्छ[1]तां द्रष्टु[2]मपां [3]निदानम् ।
वयं च सर्वे वरुणोपहूता
वार्तामिमां वक्तुमिहागतास्मः ॥ ४३ ॥

वैनतेयः—किमत्र दानवैर्व्यवसितम् ?

नारदः—लोकैकवीरत्वमखिलकल्याणगुणाश्रयता च [4]देवस्यैवेति मत्वा नूनमेत[5]दीयैर्वैपैरागत्य तस्याक्षुर्विषयीभवाम इति पूर्वदेवानां प्रयत्नः ।

(माधवः सादरमाकर्णयति)

वैनतेयः—अहो ! मूढानामयमुद्योगः यदेवमननुक[6]रणी[य]स्यापि देव[7]स्यानुकरणमूरीकृतमासीत् ।

शार्दूलकृत्तिकृतकञ्चुकभूषिता[8]ङ्गः
स्यान्नाम गर्द[9]भयुवा बहुमानकाङ्क्षी ।
[10]तादृक्[11]पराक्रमनिदर्शनसम्प्रदाये
स्वामेव गर्दभदशां प्रकटीकरोति ॥ ४४ ॥

---

[1] तां दृष्टुम-क.ग. [2] मपा नि-ग. [3] निधानम्-क.ख.ग.
[4] देवस्येति-ख. [5] दीयैरेववे-ख. दीयैर्वर्षैरा-ग. [6]करणस्यापि-क.ख.ग.
[7] स्याप्यननु-घ. [8] ङ्गः नाम-क. ङ्गः स्नूम-ग. [9] भ इवा-घ.
[10] यत्तादृक्-क. [11] पारा-क.ख.

माधवः—(कटाक्षेण वैनतेयं निवारयति)

नारदः—(माधवं प्रति) सा तु [1]त्वय्येवास्मदादिवचनोपन्यासैर्गाढानुरागा वर्तते । अतस्[2]त्वयाऽनुनेतव्या सुतरामवि[3]लम्बेन ।

वैनतेयः—(स्वगतम्) कथमयमस्मदादिवचनैरित्यात्म[4]प्रशंसां करोति ।

[5]माधवः—यद्रोचते देवर्षिवर्याय ।

वैनतेयः—किमालोच्यते विदितवेदितव्यैरपि भवद्भिः ?

या सर्वमोहजननैक[6]रसैव माया
यस्तद्वशीकरणसाहससारसीमा ।
तां तञ्च वञ्चयितुमेष्यति कश्चनेति
अन्तानुरूपमिह केन कृतः प्रलोभः ॥ ४५ ॥

माधवः—([7]साक्षेपम्) अलमलं वृथा वागाडम्बरेण । देवर्षि[8]वचः समाद्रियताम् ।

नारदः—जानाम्येवं तथापि बहिर्बुध्या [9]प्रस्तूयत एतत् ।

---

[1] त्वययैवा-ख.घ. [2] त्वया एनां ने-क. त्वया न ने-ग.
[3] लम्बनेन-क.घ. [4] प्रशंसा-ग. [5] 'माधवः' इत्यारभ्य 'प्रलोभः' इत्यन्तो भागः क. मातृकायां नास्ति । [6] रसैकमाया-क.
[7] असाक्षेपम्-क. सापेक्षं-ग. वचनं-क. [8] वचनः-ग.
[9] प्रसूयत-ग.

4

माधवः—

या नो मुञ्चति मा[1]मनन्य[2]शरणा प्रेमानुबन्धोज्ज्वला
यस्या [3]नर्म[4]कृतः क्षणं च विरहः कल्पान्तदायी मतेः ।
सा देशान्तरमेत्य जीवति [5]परस्तां काङ्क्षते [6]त्वद्गिरा
[7]लक्ष्मीर्मय्यनुरागिणीति तदहो लज्जाकुलं मे मनः ॥ ४६ ॥

नारदः—व्यावहारिकोऽयं वचनोपन्यासः । वस्तुतस्तु -

यथैव सर्वभूतानामीशितेति प्रथा तव ।
[8]येन सा चेतना[9]माप्ता को भेदो युवयोस्तयोः ॥ ४७ ॥

[10]अथ लौकिकीं [11]रीतिमनुसृत्य स्वयंवरव्याजे[12]नानुनेतव्या ।

[13]वैनतेयः—एतदेव मे रोचते ।

[14]गत्वा स्वयंवरमहोत्सवदर्शनाय
कृत्वा सुरासुर[15]चमूं न च पूजनार्हाम् ।
हृत्वा प्रियामनुसृतिप्रवणामनन्यां
छित्वा व्यथां हृदयजां शममेति तूर्णम् ॥ ४८ ॥

---

[1] मन्यश-क, मनस्यश-घ. [2] शरणप्रे-क.ग. [3] मर्मकृ-क. [4] कृतक्षणं-क.ख.घ. [5] पुरस्तां-घ. [6] तद्गिरा-क.ग. [7] लक्ष्मीमय्यनु-क.ख.घ. [8] येन वा-क. [9] माप्तो-क. [10] अथो-क.ग. अतो-घ. [11] रिति-क.ग. [12] नानुते-क. [13] 'वैनतेयः' इत्यारभ्य 'रोचते' इत्यन्तो भागः क.ग. मातृकयोः नास्ति । [14] तव्या-क. [15] चमूमसहाक्रियार्हाम्-क.ग.घ.

नारदः—युक्तमुक्तं वैनतेयेन ।

माधवः—यद्भवद्भ्यां रोचते ।

(नेपथ्ये)

यश्च [1]लोकैकवीरस्स्याद्यः कल्याणगुणाकरः ।
स एवास्तु प्रियो भर्ता कन्यायाः कलशाम्बुधेः ॥ ४९ ॥

सर्वे सविस्मयमाकर्णयन्ति ।

(प्रविश्य [2]प्रतीहारी)

प्रतीहारी—जेदु जेदु देवो ।

(जयतु जयतु देवः ।)

माधवः—[3]कस्येदमुदितम् ।

प्रतीहारी—वलुणाणु अरंस ।

(वरुणानुचरस्य ।)

वैनतेयः—शीघ्रं प्रवेशयैनम् ।

नारदः—[4]तथा क्रियताम् ।

---

[1] लोकवीरस्याद्यः क. [2] 'प्रतीहारी'-क. नास्ति । प्रतिहारी-ग.घ. [3] तस्येद-क. [4] कथा-घ.

[1]प्रतीहारी—णद्धि खु एसो पडिहालंमि एंति अउंतवंतो गदो एंव ।

(नास्ति खल्वेष प्रतीहारे एतावदुक्तवान् गत एव)

(इति यश्चेत्यादि पठति)

माधवः—[2]तदुद्ग[3]तमेवैनं वृत्तान्तमनु[4]कलयामः ।

नारदः—तद्गम्यतामचिरेण देवेन वरुणनगरीपरिसरं प्रति । अहमाकाश-गमनेनोपगच्छामि ।

(इति निष्क्रान्तः)

वैनतेयः—आरुह्यतां मम [5]स्कन्धपीठं अत्र भवान् [6]प्रभुः ।

माधवः—(तथेत्यारोहणं नाटयति)

वैनतेयः—(गतित्वरामभिनीय)

लक्ष्यन्[7]ते गिर[8]यो लतादिपिहिताः पृथ्वीस्तनाभोग[9]वत्
क्षोणीमण्ड[10]लरङ्गवल्लि[11]कलनां सप्ता[12]र्णवी विन्दति ।
आयातीव नभस[13]समक्षपदवीमायाममु[14]त्सृज्य तं
[15]देवे मद्भुजपीठगामिनि नभस्सीमानमारोहति ॥ ५० ॥

---

[1] 'प्रतीहारी'-ग. नास्ति । [2] तद्गत-ख-घ. 'तदुद्ग'-ग. नास्ति । [3] तमेनं-क.ग. [4] कलाया-क.ग. [5] स्कन्धवीर अ-क. [6] 'प्रभुः'-क. नास्ति । [7] तेऽतिर-क. [8] यो अनादि-क. [9] वत्क्षोणी-क.घ. [10] लररङ्ग-क. [11] कलना स-क. [12] र्णवीं-क.ग. र्णवि-घ. [13] सपक्ष-क.ग.घ. [14] त्सृत्य तं-क. त्सृज्य तां-घ. [15] देवे मुद्भववीरगा-क.

माधवः—सत्यमेतत् । (साश्चर्यं निर्वर्ण्य)

अहो ! वयमे[1]कोत्पतनेनैव [2]वरुणनगरीमाप्ताः स्मः ।

तथा हि—

ताड्यन्ते निबिडं महोत्सववपुषो माङ्गल्यतूर्यादयः
[3]द्राव्यन्ते [4]मदमत्त[5]वारुणगणैरा[6]गत्वरा[[7]येऽ] सुराः ।
चातुर्वर्ण्यगतागतैरविरलश्रेणी पुरी लक्ष्यते
[8]सेयं वक्ति बहिर्विमानपटली स्वायंवरोपक्रमम् ॥ ५१ ॥

(इति निष्क्रान्तौ ।)

॥ इति प्रथमोऽङ्कः ॥

## द्वितीयोऽङ्कः ।

(ततः प्रविशति कञ्चुकी)

कञ्चुकी—अहो ! चिरेण [9]कुमारन्यस्त[10]प्रतीहाराधिकारो विश्रान्तिसुखमनुभवामि । तथा हि—

---

[1] कौत्पपतत-क, [2] वरुणान-क. [3] वार्यन्ते-ग. [4] मवम-क, [5] वारण-ख.ग.घ. [6] गत्यरा-क, [7] यो सुराः-क. ये सुराः-ख.ग.घ. [8] नेयं-ख. [9] 'कुमार'-क,ग. नास्ति । [10] प्रतिहा-क,ग.

यदीक्षितं नेक्षितमेव, यच्छ्रुतं
तदश्रुतं, यच्च हितं [1]तदन्यथा ।
अधीतमन्तःपुर[2]चारिणां [3]क्रमं
[4]परं किमध्यापयितुं सहेत धीः ॥ १ ॥

(इति परिक्रम्य पुरोऽवलोक्य) कथमियं भर्तृदारिकायास्सखी मनोरञ्जनी नाम । भवत्वाभापयामि । अयि [5]मनोरञ्जनि ! कुतो वा कुत्र प्रस्थितासि ?

**मनोरञ्जनी**—देवीणां संदेसादो भट्टिदारिआये पलिंकालसामंगी समाणअणंथं कोसघरं पंथिदोह्मि ।

(देवीनां सन्देशाद्भर्तृदारिकायाः परिष्कारसामग्रीसमानयनार्थं कोशगृहं प्रस्थितास्मि ।)

**कञ्चुकी**—[6]अहो ! मौग्ध्यमन्तः[7]पुरिकाजनस्य ।

वपुर्जगद्भूषयति स्वयं यत्
कथन्नु तद्भूषणमीहतेऽन्यत् ।
जगत्प्रकाशावहसूर्यविम्ब-
प्रकाशने [8]कि[न्न्वि]ह साधनं स्यात् ॥ २ ॥

---

[1] तवान्य-क. [2] चारिणं-ग. [3] क्रमः-क. [4] पुरं-घ.
[5] मनोरञ्जनी-क.ख.ग. [6] अह्मो-ग. [7] पुरेका-क.ग.
[8] किन्विह-क.ख.ग. किन्त्विह-घ.

**मनोरञ्जनी**—अंअ एवंएदं तहवि सोहंगसोहंथं एदं ववसिदं अवि अ ।
(आर्य ! एवमेवैतत् । तथाऽपि सौभाग्यशोभार्थमेतद्व्यवसितम् । अपि च ।)

**कञ्चुकी**—ज्ञातं ज्ञातं, स्वयंवरावसर इति [1]नेप[2]थ्यरचनोपयोगः ।

**मनोरञ्जनी**—अह इं ?
(अथ किम्?)

**कञ्चुकी**—[3](विहस्य)

**रत्नाकरसुताया यद्रत्नाभरणधारणम् ।**
**मन्ये नेपालभूपालकन्याकस्तूरि[4]कार्पणम् ॥ ३ ॥**

परन्तु स्वानुरूपवरलाभ एव आशास्यो वत्सायाः ।

**मनोरञ्जनी**—(विहस्य)कहं अंदेवुरचालिणोवि अंजंस उंतंतविंणाणं णंधि ।
(कथमन्तःपुरचारिणोऽप्यार्यस्य वृत्तान्तविज्ञानं नास्ति ।

**कञ्चुकी**—एतावदेव जानामि । [5]यदुद्घोषितं दूतमुखेन भगवता सागराधिराजेन, यश्च लोकैकवीरः स्यात् । ([6]इत्यादि पठति ।)

---

[1] नैपथ्य-घ. [2] थ्यवचनो-क. [3] 'विहस्य'-क. नास्ति ।
[4] कावर्णनम्-क.ग. [5] यदुद्भूषितं-क. [6] इति-क.ख.ग.

मनोरञ्जनी—तारिसं पुरिसं कंणु तंकेसि ?

(तादृशं पुरुषं कं नु तर्कयसि ?)

कञ्चुकी—(विचिन्त्य)

[1]योऽसौ मन्मथमन्मथ[2]श्शर[3]णगत्राण [4]प्रवीणश्शुचिः
शूराणामधिदैवतं सुरचमूकोटीररज्ज्यत[5]पदः ।
आम्नायैक[6]पदं निरन्तरवयश्शालीनतालंङ्कृतः
सारस्सर्व[7]जगद्गणस्य जयति श्रीमानसौ [8]माधवः ॥ ४ ॥

स एव कन्यायाः अनुरूपवल्लभ इति तर्कयामि । किन्तु....

मनोरञ्जनी—सावसेसं विअ अअंस वअणं ।

(सावशेषमिवार्यस्य वचनम् ।)

कञ्चुकी—भर्तृदारिकायाः कं प्रत्यभि[9]लापो वर्तते ?

मनोरञ्जनी—णखु गोवणिंजं किंवि आंअंस तंसिंएंव अहिणिवेसो माहवे भंटिदारिआए ।

(न खलु गोपनीयं किमप्यार्याय तस्मिन्नेवाभिनिवेशो माधवे भर्तृदारिकायाः)

---

[1] योसा-घ. [2] श्शरगण-ख. [3] णसत्राण-ग. णत्राण-ख. [4] प्रवीरश्शुचिः-क. प्रवीणश्शुचिः-ख. [5] पथं-क-ग-घ. [6] पदं-ख.ग.घ. [7] जगत्जनस्य-क.ग.घ. [8] राघवः-क. [9] लापो व-क.

**कञ्चुकी**—इदानीमानन्दतुन्दिलं मे मनः ।

इनं [1]कमलिनी यद्व[2]दिन्दुं [3]कैरविणी यथा ।
माधवं रमणं प्राप्य मनोज्ञाति[4]तरां [5]रमा ॥ ५ ॥
तथापि किमपि [6]छद्माचरिष्यन्ति [7]दानवा [8]इति श्रूयते ।

**मनोरञ्जनी**—अंअ किंणुएदं ?

(आर्य [9]किन्वेतत् ?)

**कञ्चुकी**—न भेतव्यं न भेतव्यम् ।

वितत्य [10]वैष्णवीं मायां [11]वीरः श्रीमाधवः स्वयम् ।
अशेषमाया[12]सन्दोहमाशु संशोषयिष्यति ॥ ६ ॥

**मनोरञ्जनी**—तह जदि उज्जीविदह्म ।

(तथा यद्युज्जीविताःस्मः ।)

[13]**कञ्चुकी**—एवमेतत् ।

---

[1] कमकमलिनी-क. [2] दिमं-क.ग. [3] कैवरिणी-ग. कैरवणी ख.घ. [4] तरा-क. [5] मया-ग. ममा-घ. [6] चम्वाच-ग. [7] दानवादयः-ग.घ. दानवा वयमिति-क. [8] 'इति'-क. नास्ति । [9] किन्त्वेतत्-क. [10] वैष्णवीमा-क. [11] वीरश्रीमाधवः-क.ग.घ. [12] सम्मोह-क.ग. [13] 'कञ्चुकी-एवमेतत्' क. नास्ति ।

(नेपथ्ये)

सुरवासवमौनिसिद्ध[1]साध्योरगविद्याधरयक्षराक्षसाद्याः ।
वरुणानु[2]चरोपनीत[3]वार्तामु[4]परुध्योपगताः स्वयंवरार्थम् ॥७॥

**कञ्चुकी**—(ससम्भ्रमम्) अहं राजकुलमुपगच्छामि समयोचिता[5]चरणाय त्वमपि[6]देवी[7]निर्देशमशून्यं कुरु ।

(इति निष्क्रान्तौ।)

(मिश्रविष्कम्भः।)

(ततः प्रविशति रमा सखी देव्यश्च)

**देव्यः**—अपि नाम पर्याप्त[8]माभरण[9]जालं वत्सायाः ।

**सखी**—देविहिं जह आणंतं तह किदंएवं ।

(देवीभिः [10]यथाऽऽज्ञप्तं तथा कृतमेव ।)

**रमा**—(सखीमपवार्य) अंज सोअंवरंथलं ठिदाणं देवादीणं मंझम्मि संचलणं कादंवोंति लंजा मे हिअअंस !

(अद्य स्वयंवरस्थलस्थितानां देवादीनां मध्ये सञ्चरणं कर्तव्यमिति लज्जा मे हृदयस्य)

---

[1] सध्यो गरुडोर-क.ग. [2] चनीत-क. [3] वाताप-क. वातामुदुप-घ. [4] परुद्योपता-क. [5] चरणीय-क.ग. [6] 'देवी'-ख. नास्ति । [7] निर्देशं शू-ग. [8] मारण-क. [9] जातं व-क.ग. [10] यदाज्ञ-घ.

सखी—(रमामपवार्य) हला ! जह आणंतं देविहिं तह कादंवएवं ।
(हला ! यथाऽऽज्ञतं देवीभिस्तथा कर्तव्यमेव ।)

देव्यः—(निर्वर्ण्य)

विधानमस्याः खलु [1]भूषणानां
पिधानमेवातनुतेऽङ्गलक्ष्म्याः ।
तथापि सौभाग्यविवर्धनाय
वितन्यते वीरवरोचितायाः ॥ ८ ॥

सखी—(रमां प्रति सहर्षं संस्कृतमाश्रित्य)

सखि ! ते विधृतिर्विभूषणानां
सुजना[2]चारवशादिति प्रतीमः ।
परमङ्गविलासमङ्गलाना-
मवनं [3]यौवनमेव भूषणानि ॥ ९ ॥

रमा—(माल्येन ताडयति ।)

देव्यः—वत्से ! त्वमाज्ञप्तास्यस्माभिः स्वयंवराभिगमनाय । अत एवानया सख्या [4]सह तमुद्देशमु[5]पेहि । यावद्वयमपि [6]गवाक्षपथेन प्रासा[7]दस्थाः पश्यामः ।

(इति निष्क्रान्ताः ।)

---

[1] भूषणां-घ. [2] चारमिति प्र-क.ग. [3] यद्वन-क. [4] सहित-क. [5] पैति-घ. [6] वाक्षप-ग. [7] दस्य-ख.ग.घ.

सखी—हला इदो । हला इदो ।

(हला ! इतः । हला ! इतः ।)

रभा—जं रोअदि पियसहिए ।

(यद्रोचते प्रियसख्यै ।) (इति शनैर्गच्छति ।)

(ततः प्रविशतो वैतालिको विदूषकश्च ।)

वैतालिकः—अहमादिष्टोस्मि महा[1]राजेन वरुणेन यथा "[2]वत्स कौसुम्भ ! गच्छ स्वयंवरमण्टपोद्देशम् । यतः तत्र[3]मिलितानां सुरासुरादीनां [4]कुलशीलादिवर्णनं वत्सायाः निकटे कर्तव्य"मिति, [5]ततो यथा [6]निर्देशमाचरामि । (इति परिक्रामति ।)

विदूषकः—हं आदिंठोह्मि महालाअ वलुणेण जह अले कीसमुह जाव आअंछदि सोअंवलमंडवं वंजा लमा दावएवं तुएवि पंसवंठिणा ताणं ताणं देंवादीणं गुणदोसंपअडणकालिण होदंवोंति । तह कलिअ महसवें जह मणोरहं गोहुम-अवुवभंखणं कलेमि ।

(अहमादिष्टोऽस्मि महाराजवरुणेन यथा अरे ! कीशमुख ! यावदागच्छति स्वयंवरमण्टपं वत्सा रमा, तावदेव त्वयापि पार्श्ववर्तिना तेषां तेषां देवादीनां गुणदोषप्रकटनकारिणा भवितव्यम्,

---

[1] राजव-ख. [2] "वत्स कौसुम्भ"-क,ग. नास्ति । वत्स कौकुम्भक-घ. [3] मिलानां-घ, [4] कुशल-ग. [5] तथो-घ, [6] निदेश-ख.

इति । तथा कृत्वा महोत्सवे यथामनोरथं गोधूमापूपभक्षणं करोमि ।) (इति परिक्रामति ।)

**सखी**—हला ! णखु एसो ओसरो लज्जाए ।
ता कहंवि धेरं गिह्णिअ संवाणं
गिंवाणादीणं णेंतुसहवं करेहि ।

(हला ! न खल्वेषोऽवसरो लज्जाया: ।
तस्मात् कथमपि धैर्यं गृहीत्वा सर्वेषां गीर्वाणादीनां नेत्रोत्सवं कुरु ।)
(रमा कथञ्चित् स्वयंवरस्थलप्रवेशं नाटयति ।)

**वैतालिक:**—(निर्वर्ण्य) [1]कथमागतैव, भर्तृदारिका, सखी च ! तद्यथोचितमग्रतो भूत्वा [2]सर्वेषां कुलशीलादिकं वर्णयामि । (इति उपसर्पति ।)

**विदूषक:**—एसा भट्ठिदारिआ । (इत्यग्रतो भूत्वा) जेदु जेदु भट्ठिदारिआ ।

(एषा भर्तृदारिका । (इत्यग्रतो भूत्वा) जयतु जयतु भर्तृदारिका ।)

**वैतालिक:**—जयतु भर्तृदारिका । जयतु भर्तृदारिका ।

---

[1] गथ-ग. [2] "सर्वेषां"-क.ग. नास्ति ।

[१]मनोरञ्जनी—अए वैतालिअ संवाणं कुलसीलादिअं णिवेदेहि सहिए ।

(अये वैतालिक ! सर्वेषां कुलशीलादिकं निवेदय सख्यै ।)

वैतालिकः—अयि भर्तृदारिके ! चक्षुरितो [1]विक्षिप्यतां किञ्चिदत्र भवत्या ।

मञ्चावलीषु मदनोपमदिव्यदेहाः
माणिक्यभूषणविनिर्मितसर्वमोहाः ।
मन्दो[2]दयं तरुणि[3]मोत्थमद[4]प्ररोहाः
मध्ये स्वयंवरतलं सुमनस्समूहाः ॥ १० ॥

मनोरञ्जनी—हला भट्ठिदारिए ! एदाणं मज्झमि कोंवि जइ अहिलासविसओ पेंखदु होदि । -

(हला भर्तृदारिके ! एतेषां मध्ये कोऽपि यद्यभिलाषाविषयः पश्यतु भवती ।)

विदूषकः—किंणु एदेहिं दाणवावसदेहिं जेकिल भंल्लएहिंविअ वलीमुहा खणे खणे वि विंदावअंदि देवेहिं ।

---

[१] इयमेव रमायाः सखी ।

---

[1] विज्ञप्यतां-क. [2] दयत्तरु-ग.घ. [3] मोद्गम-क. [4] प्ररोहा-ग.

(किन्त्वेतैर्दानवापशदैर्ये किरु भल्लूकैरिव वलीमुखाः क्षणे क्षणेऽपि विद्राव्यन्ते देवैः ।)

रमा—(सखीं प्रति) पुलो मंगं आवेदेहि ।

(पुरो मार्गमावेदय ।)

(सखी तथा करोति)

वैतालिकः—

['ये]षामीपत्कर[2]मिव सुरानीकविद्रावणं स्यात्
आजन्म श्री[3]महितभवनं मन्दिरं चापि [4]येषाम् ।
अध्येतारो निगमविततेरग्निहोत्र[5]प्रवेकाः
मध्ये [6]भव्यं विदधति मुदं दानवा मानवर्याः ॥ ११ ॥

मनोरञ्जनी—हला ! भंठिदारिए ! जाणासि तुमं एदाणं कोंवि अणुरुवोत्ति ।

(हला भर्तृदारिके ! जानासि त्वमेतेषां कोप्यनुरूप इति ।)

विदूषकः—

णिंदयकिदहिंसाणं णिंवेलमदाणुरूवचलिदाणं ।
किंणु किलदाणवाणं किलासालित्तणं अपुंणाणं ॥ १२ ॥

(निर्दयकृतहिंसानां निर्वेलमदानुरूपचरितानाम् ।
किन्नु किल दानवानां क्रीडाशालित्वमपुण्यानाम् ॥)

---

[1] षामी-क. एषामी-ख.घ.वेषामी-ग. [2] 'मिव'-ख. नास्ति । [3] महिवि-क. [4] एषाम्-क.ख.ग. [5] प्रवेश-क. [6] कव्य-क.

**रमा**—सहि गंछदु पुलदो होदि ।

(सखि ! गच्छतु पुरतो भवती ।)

(इति सर्वे परिक्रामन्ति ।)

**वैतालिकः**—अहो ! एतेषा[1]मा[2]भिरूप्य[3]मद्य विद्या[4]धरादीनामुपदेव-समुद[5]यानाम् ।

अणिमादिसिद्धिरपि च स्वभावजा
[6]गणनातिलङ्घि विभ[7]वास्पदं पदम् ।
अनि[8]शानपायकलितं नवं वयः
क नु भाति [9]तौल्यमुपदेवसम्पदाम् ॥ १३ ॥

**मनोरञ्जनी**—हला ! पेंख एदाणं रमणिजंतणं ।
(हला पश्य एतेषां रमणीयत्वम् ।)

**विदूषकः**—(विहस्य) दिंठा एवं सदसो एदेवि ।

पादुअंवजणपाणभाअणं
छंतचामलकलंकधालणं ।
संकमुंकसविहे कलंदि जे
किंणु दाण उणदंसणेण दे ॥ १४ ॥

---

[1] मभि-क. [2] भितोप्य-क. [3] मव्य-क. [4] धराध्याना-ख.घ. [5] यादीनाम्-क. [6] वणनाति-घ. [7] वास्य स-क. [8] शापान-ख. [9] लौल्य-क.

(दृष्टा एव शतशः एतेऽपि,
पादुकाव्यजनपानभाजनछत्रचामरकरङ्कधारणम् ।
शक्रमुख्यसविधे कुर्वते ये किन्नु तेषां पुनर्दर्शनेन ते ।)

रमा—(अन्यतो दृष्टिं प्रेरयति ।)

सखी—इदो इदो ।
(इत इतः ।)

वैतालिकः—इदमत्र नयनरसायनम् ।

यद्दोर्दण्डविजृम्भिश[1]म्ब[2]विदल[3]त्पक्षाः पुरा भूधराः
[4]वि[द्रु]त्याब्धिसद्मं सदा शरणयन्त्यन्तर्जले यन्त्रिताः ।
सर्वेषामपि यस्सुपर्वसदसामग्रेसरश्श्रीकरः
[5]सोऽयं दीव्यति मञ्चसीमनि शचीकौमारहारी हरिः ॥१५॥

किञ्च,

सुर[6]भूरुह एव पुष्पवाटी
१म[7]णिरस्यामर एव रत्नपेटी ।

---

१ आमरः अमरेभ्यः प्रदत्तः यः मणिः स एव अस्य इन्द्रस्य रत्नपेटी ।
'मणिरत्नाकर एव' इति पाठः स्याद्वा ?

---

1 शम्भवि-ग. 2 विदलित्प-क.ख. 3 त्पक्षा पु-क.
4 विधृत्या-क.ख.ग. विभृत्या-घ, 5 सोऽय-ख. 6 भूरूह-क.ख,ग. 7 णितस्या-क.

पुर एव वसत्यजस्रगण्या
[1]सुरराजस्य सुखानुभूति[2]कोटी ॥ १६ ॥

**मनोरञ्जनी**—हला ! एदंस पेंखदु महणिजंतणं जदि मणोरहो होदीए ।

(हला ! एतस्य पश्य महनीयत्वं यदि मनोरथो भवत्याः ।)

**विदूषकः**—(विहस्य) णादम् । णादम् । एदंस पलंकमविलसिदं । आकुंचिअसीसेण वावाराणंत लंथ सोंख्रेण समओणेण खु णीदोसहजेहिं किल हिरंणअसिवुघरे । अवि अ ओहरिदवाहणेणं पंभंट-मणुंणरंणमउडेण पंतोणेण पलिहवोसंकेण चिलं हिरंणअसिवुघरे । (ज्ञातम् । ज्ञातम् । एतस्य पराक्रमविलसितम् । आकुञ्चित-शीर्षेण व्यापाराज्ञप्तलब्धसौख्येन समयोऽनेन खलु नीतस्सहजैः किल हिरण्यकशिपुगृहे । अपि च अपहृतवाहनेन प्रभ्रष्टमनोज्ञ-रत्नमकुटेन प्राप्तोऽनेन परिभवदशक्रेण चिरं हिरण्यकशिपुगृहे ।)

**रमा**—हला ! पुलदो गंछ ।

(हला ! पुरतो गच्छ ।)

(सर्वे तथा कुर्वन्ति ।)

**वैतालिकः**—

यस्तेजोनिधिरित्यतीव हविषां दाता सुराणामिति
प्रायः संयमिभिः [3]क्रतुष्वविरता मोदेन [4]जेगीयते ।

---

[1] सुतरा-क. [2] कोऽपि-क.ख.ग. [3]कृतु-क.ख. [4] जीगीयते-ग.

माहात्म्यैकखनिर्महाबलसुहृन्मा[1]न्यस्त्रयीसन्ततेः
स्वाहाजा[2]निरयं चकास्ति पुरतः [3]सम्प्राप्तसौम्याकृतिः ॥१७॥

मनोरञ्जनी—हला ! सुदं तुए एदंस उलसीलादिअं ।
(हला ! श्रुतं त्वया एतस्य कुलशीलादिकम् ।)

विदूषकः—णिवुणं खु णादं सव्वेहिं विविंठिवीअ देवाणं सीसेणाहलिअ अंणकवलाणि विसंतिं णलहमाणो किसदिएसोति णिअमसंवादो ।
(निपुणं किल ज्ञातं सर्वैरपि वृष्टिहारीव देवानां शीर्षेणाहृत्य अन्नकवलानि विश्रान्तिमलभमानः क्लिश्यत्येष इति निगमसंवादः ।)

रमा—हला! इदो इदो आअंछ ।
(हला ! इत इत आगच्छ ।)
(इति सर्वे परिक्रामन्ति ।)

वैतालिकः—(हस्तमुद्यम्य)

धर्मो विग्रहवानेष
दाक्षिण्यविहितालयः ।
प्रतिबिम्ब इवार्यम्णः
[4]प्रतिभाति [5]प्रभामयः ॥ १८ ॥

---

[1] न्ययी-घ. [2] नियुचं-क. [3] सप्राप्त-क.घ. [4] प्रभाति-क.ग. [5] प्रतिभामियः-क.ग.

मनोरञ्जनी—किंणु वंटदि सहिए मणंमिंति तंकेमि ।

(किन्नु वर्तते सख्याः मनसीति तर्कयामि ।)

विदूषकः—णिलवहिअ हिंसापलेंति ।

(निरवधिकहिंसापर इति ।)

रमा—किंणु एदेण कालं खेवेण ।

(किन्वेतेन कालक्षेपेण ।)

(सर्वे पदान्तरं गत्वा)

वैतालिकः—

[1]निर्ऋतिरेष विजयते निरुपमसाहाय्यनिर्जितारातिः ।
दिक्पालकस्तुरीयस्त्रिषु सामादिषु चतुर्थ इव दण्डः ॥१९॥

मनोरञ्जनी—पेंखदु होदि अणुरूवो णवेंति ।

(पश्यतु भवती अनुरूपो न वेति ।)

विदूषकः—णादपुंवो एंवं एसो-

अणुसलइ सुलसमाजं अणुवंटदि दाणवादिअं सजणं ।
वुहअं भंटो एसो केण वुण सिलाहणिंजविहवंढो ॥ २० ॥

---

[1] नियुतिरे-क. निऋतिवेषः-ग. निर्ऋुति-ख. निऋति-घ.

(ज्ञातपूर्व एवैषः ।-
अनुसरति सुरसमाजं अनुवर्तते दानवादिकं स्वजनम् ।
उभयभ्रष्ट एष केन पुनः श्लाघनीयविभवाढ्यः ॥)

रमा—हला ! पुलो मंगं आवेदेहि ।

(हला ! पुरो मार्गमवेदय ।)

मनोरञ्जनी—इदो इदो ।

(इत इतः ।)

(सर्वे परिक्रामन्ति ।)

वैतालिकः—

यदुपासनया परं मुनीन्द्राः
नियतं सौख्यमयं [1]तृणादयन्ते ।
सुमनोगणसङ्घसम्प्रदायः
प्रचुरामोद[2]वहः स गन्ध[3]वाहः ॥ २१ ॥

मनोरञ्जनी—हला ! भंटिदारिए एसो पेंखिजदु जअंपाणो ।
(हला ! भर्तृदारिके ! एष पश्यतां जगत्प्राणः।)

विदूषकः—भंखदि णाम कीडा तिखंस हुदासणंस जं मितं जंस सदा गइखेदो तं सरिसं केणुमंणंति ।

---

[1] त्रणा-ग.घ, [2] वहास्स-क. वहास्सु-ग. [3] वाहाः-क.ख.

(भक्षयन्ति नाम कीटाः तीक्ष्णस्य हुताशनस्य यन्मित्रं यस्य सदा गतिखेदः तं सदृशं केऽनुमन्यन्ते ।)

रमा—अन्यतो गच्छति ।

वैतालिकः—

अयं प्रियं मित्रमलीकदृष्टेः अखण्डभोगैकनिधेः [1]परस्य ।
निधान[2]नाथैकपदाभिदेयः प्रधानदिक्पालक एष धीरः
॥ २२ ॥

अस्य चैत्ररथं नाम [3]वनं मधुरसावनम् ।
यस्य पौरन्दरावास[4]नन्दनं नन्दनायते ॥ २३ ॥

मनोरञ्जनी—हला ! जदि णेंताणं पंतं एसो होदिए । संवं सुहोदंकं हविंसदि ।
(हला ! यदि नेत्रयोः पात्रमेष भवत्याः । सर्वं शुभोदर्कं भविष्यति ।)

विदूषकः—

एपो खु दुंगकुविदंखिकोणं
पतंत णेंतोदिअ पीदरीदि ।
पसिंधवाणिजपदाहिआरो
पंथावपंतं किमु घुणभाजं ॥ २४ ॥

---

[1] पदस्य-क.-ग. [2] नादैक-घ. [3] वनस्य-क. [4] नन्दनन-ख.

(एष खलु दुर्गाकुपिताक्षिकोण-
प्रतप्तनेत्रोदितपीतरीतिः ।
प्रसिद्धवाणिज्यपदाधिकारः
प्रस्तावपात्रं किमु पुण्यभाजाम् ॥)

(रमा—अवधीरणां नाटयति ।)

वैतालिकः—

अमी शिवागस्त्य[1]भयेन्द्रचन्द्रमाः
[2]कुवेरविघ्नेश्वरशेषनारदाः ।
रविगुरुश्चापि महोत्सवेक्षण-
[3]प्रसंगिनो माधवपार्श्वगामिनः ॥ २५ ॥

रमा—(स्वगतम् ।)

पतत्तचामीअरमंजुलंबरो
पपुंल भंमंबुजमंलकंधरो ।
सुपंणकंठपिदबाहुदंणओ
विलोचणाणं पदिसेदि मे सुहम् ॥ २६ ॥

(प्रतप्तचामीकरमञ्जुलाम्बरः
प्रफुल्लभर्माम्बुजमाल्यकन्धरः ।
सुपर्णकण्ठार्पितबाहुदण्डको
विलोचनाभ्यां प्रदिशन्ति मे सुखम् ॥)

---

[1] यमेन्द्र-ग. [2] कुजेर-क. कुवैर-ख. [3] प्रसंसदो-क. प्रशंसतो-ग.

(प्रकाशम्) हला ! मणोरंजणि, अतिमेंतं किलंतह्मि, गदागदेहिं । ता सणेहिं गंछ । (हला मनोरञ्जनि ! अतिमात्रं क्लान्तास्मि गतागतैः । तस्माच्छनैर्गच्छ ।

मनोरञ्जनी—णादं णादं । तहएव्व कलेमि । जदि मणोरहं परिपुंणं करेसि । जं किंविभूसणं पदंते जदि होदि हंवि सणेहिं गंछामि । (ज्ञातं ज्ञातम् । तथैव करोमि । यदि मनोरथं परिपूर्णं करोषि, यत्किमपि भूषणं प्रदत्ते यदि भवती अहमपि शनैर्गच्छामि ।)

रमा—तथा (इति सर्वेषां मुक्ताहारादिकं ददाति ।)

वैतालिकः—(जनान्तिकम् ।) अपिनामास्मिन्माधवे [1]भर्तृदारिका कृतानुरागा संवृत्ता ।

विदूषकः—अले दासीए वुत किंणु मं पुंछेसि ।
तुमं एव्व ताए मुहसिरिअं पंखिअ बुंधेहि । अहवा दासीए वुंतिं मणोरंजणिं पुंछ । (अरे दास्याः पुत्र ! किन्नु मां पृच्छसि ? त्वमेव तस्याः मुखश्रियं दृष्ट्वा बुध्यस्व । अथवा दास्याः पुत्रीं मनोरञ्जनीं पृच्छ ।)

वैतालिकः—ज्ञातप्रायमेवैतत् । यदियं—

मदनमदनरूपं माधवं [2]प्रेक्षमाणा
मतिम[3]नवधिरागोन्मादिनीमेव धत्ते ।

---

[1] 'भर्तृदारिका' क.ग. मातृकयोः नास्ति । [2] प्रेक्ष्यमा–ग.
[3] नपथिरा-घ.

न यदि मुखवि[1]कासः स्रंसनं [2]वेणिकायाः
नयनवलनलक्ष्मीनव्य[3]भङ्गी [4]कथं स्यात् ॥ २७ ॥

विदूषकः—(मनोरञ्जनीं प्रत्यपवार्य ।) अए मणोरंजणि कहेहि संचं एंव । एदाए भंटिदारिआए मणो माहवे ! संजदि णवेति ।

(अये मनोरञ्जनि ! कथय सत्यमेव । एतस्याः भर्तृदारिकायाः मनो माधवे सज्जति न वेति ।)

मनोरञ्जनी—(सभ्रूभङ्गम्) अले ! तुमं एंव जाणासि ! (अरे ! त्वमेव जानासि ! )

(इति भर्तृदारिकामुखं दर्शयति ।)

[5]रमा—(सरोपसंरम्भम् ।) मं किलंतं वुंदिसिअ किंवि किंवि जंपसि ?

(मां क्लान्तामुद्दिश्य किमपि किमपि जल्पसि ?)

(इति माल्येन ताडयति ।)

वैतालिकः—(निर्वर्ण्य साश्चर्यम्)

---

[1] कास स्रं-क.ग. [2] वेदिका-घ. [3] भङ्गीकरंङ्गी क-क.
[4] करं स्या-क. [5] 'रमा' इत्यारभ्य 'मन्महे' इत्यन्तो भागः क. मातृकायां नास्ति ।

दलन्नीलाम्भोजव्यतिकरपरिस्पर्धिवपुषं
जगद्वीराभिख्या प्रकटनचणानेकविरुदम् ।
नवाम्भो[1]जाताक्षं नम[2]दभयदानव्रतधरं
प्रपश्यैनं देवं [3]प्रमथसमराणामनुपमम् ॥ २८ ॥

रमा—हला ! किलंतह्मि ण पसरंदि पुरदो मम हंदपादाओ ता खणं तिंठ ।

(हला ! क्लान्तास्मि न प्रसरति पुरतो मम हस्तपादं तस्मात् क्षणं तिष्ठ ।)

(इति चक्षुर्विक्षिपति ।)

(नेपथ्ये ।)

अमृतकलशहस्तं हन्त धन्वन्तरिं द्रा-
गसुरविततिरेषा हन्तुमभ्यागताऽभूत् ॥ २९ ॥

(सर्वे सशङ्कात्रासं विद्रवन्ति ।)

(पुनर्नेपथ्ये)

अभयवचनदायी माधवोऽसौ विजित्य
प्रसभमरिनिकायं तं निनाय स्वपार्श्वम् ॥ ३० ॥

(सर्वे समाश्वसन्ति ।)

---

[1] जाचक्षन-घ. [2] दवदनान-ग. [3] प्रथम-क,ख,ग.

मनोरञ्जनी—भट्टिदारिए दिंठिआ वंढामहे । जं माहवं खणकिदारि-
विअअं पेंखह्म ।

(भर्तृदारिके ! दिष्ट्या वर्द्धामहे, यन्माधवं क्षणकृतारिविजयं
पश्यामः ।)

रमा—(अनाकर्णितकेन ।) (स्वगतम्)

अह्महे वीरंतणं मणोरहवंलहंस -

णं चवदि मुहंस सिरी
णं कंमदि तणुलदावि सुउमारा ।
णं वेंचंसदि माला
एदेण कहं णु रिपुजओ लंधो ।।३१।।

(अहो वीरत्वं मनोरथवल्लभस्य
न च्यवते मुखस्य श्रीः
न क्लाम्यति तनुलतापि सुकुमारा ।
न व्यत्यस्यति माला
एतेन कथन्नु रिपुजयो लब्धः ।।)

(इति माधवं पश्यति ।)

मनोरञ्जनी—किं एदेण अलसंतणेण ? तेंलोंकवीरंस एदंस महुअमालं-
एंव पारितोसिअं करेहि । (किं एतेनालसत्वेन? त्रैलोक्यवीराय
एतस्मै मधूकमालामेव पारितोषिकं कुरुष्व ।)

विदूषकः—अहंवि बुहतिआं देमि ।
(अहमपि बृहतिकां ददामि ।)

(इत्युत्तरीयं स्रंसति ।)

**वैतालिकः**—न खल्वेतावदौदार्यं प्रकटयतु भवान् ।
(इति निवारयति।)

**रमा**—जह तुह्माणं रोअदि हिअअस ।
(यथा युष्माकं रोचते हृदयाय)

**सर्वे**—प्रियं नः प्रियं नः ।
(इति निष्क्रान्ताः सर्वे ।)

॥ इति द्वितीयोऽङ्कः ॥

## तृतीयोऽङ्कः

(ततः प्रविशति मयूरमालाधरः सवधूको माधवः, शिवादयो वैनतेयश्च ।)

**माधवः**—(स्वगतम्) अहो! शीतलता सुधाया इव तदीय[1]स्पर्शस्य ।
(सोत्साहम् ।)

[2]स्रोतोऽसि चन्दनरसस्य सुधामयूख-
जातामृतद्र[3]वभरप्लवनं किमेतत् ।

---

[1] स्पर्शश्च-ग. [2] स्रोतोमि-क.ख.ग. [3] वजर-ग, वकर-घ.

[1]येनाभवन्मनसिजप्रभवप्रतापः
तावानपि क्षणल[2]वापहृतप्रभावः ॥ १ ॥

स्मरामि तस्याः ।

[3]आनङ्गोन्मदलालसैरवयवैः अव्याजचेतोहरैः
आ[4]नन्दैकनिकेत[5]नत्वविरुदैः आलोकसान्द्रामृतैः ।
आग[6]त्याग्रभुवं मधूक[7]कलिकामालां मदीये गले
सा कन्या निदधे फलं [8]हि तपसां एतद्वयं मन्महे ॥ २ ॥

(इति पारवश्यं नाटयति ।)

इतरे—

माधवीमधुसम्बन्धो मनसोऽस्तु मुदावहः ।
स्निग्धयोरनयो[9]रेव चन्द्रिकाचन्द्रयोरिव ॥ ३ ॥

वैनतेयः—अहो ! [10]कथमेकपद एव निरस्तस्तावानपि विरहजन्मा ताप इति नैसर्गिकीमुत्साहवत्तां प्रथयत्येतस्य ।

तथा हि—

मुखमण्डलेऽपि [11]न पुरेव पाण्डिमा
नयनाम्बुमौक्तिकसमं प्रहर्षजम् ।

---

[1] येनाभ घ. [2] वादहृ-ग. [3] अनङ्गो-क.ख. [4] नङ्गैक-ग.
[5] 'नत्व' क.ख.नास्ति । [6] न्याश्रभु-क.ख. न्यागभु-घ.
[7] कलितां मा-क.ख. [8] हि तवहं ए-ग. [9] रेप: च-क.ग.घ.
[10] कमेकप-क. पथमेकप-घ. [11] नपुरेव.क.

श्वसितं च तापर[1]हितं सुशीतलं
तनुकान्तिरेतदखिलं मनोरमम् ॥ ४ ॥

माधवः—(चक्षुषी उन्मील्य वैनतेयं प्रति)

[2]अयि विनतानन्दन ! समयोचित[3]करणाय देशान्तरवासिनो देवगन्धर्वादयः समादिश्यन्ताम् ।

कल्प्यन्तां [4]हरिदन्तदन्तिनिकराः कल्याणवेषाम्बराः
सर्वे [5]पुष्परथाश्चरन्तु गगने सै[6]न्याधिवाहोत्तमैः ।
आयान्त्वद्य सुनन्दनन्दमुखरा [7]ये [8]पारिषद्याधिकाः
सारोऽयं खलु वर्ततेऽब्धिदुहितुः सद्यो विवाहोत्सवः ॥ ५ ॥

इतरे—

न खल्वमी तत्रभवतः सन्देशं आशंसन्ते,
[9]यत्सर्वेप्याग[10]तास्सज्जीभू[11]ताश्च परिचर्यायाम् ।

(नेपथ्ये मृदङ्गध्वनिः। सर्वे आकर्णयन्ति ।)

---

[1] हितस्वशी-क.ग. हितं स्वशी-ख. [2] अये-ख.घ. अइ-ग. [3] करणीयं दे-क. [4] हरिदन्तिदन्तनि-ग. [5] पुष्पर-ख. [6] न्यादिवा-क.ग.घ. [7] एषा-ख. [8] निषद्या-ख. [9] तत्त्-क.ग.घ. [10] ताश्च-स-क. [11] ताः ध-क.

(पुनर्नेपथ्ये)

जामता जगदेकवीरविरुदप्रख्यातसम्पत्खनिः
योऽयं मानससीम्नि पूर्वनिहितः प्रायो गुणानां निधिः ।
दातव्या यदसावशेषजगतामानन्द[1]सन्दायिनी
[2]कन्याऽस्मै यदि किं [3]ब्रुवे परि[4]णतिं [5]भोग्यस्य भाग्यस्य नः
॥ ६ ॥

सर्वे—[6]कस्येदमुदितम् ? मुदितान्तरङ्गस्य ।

प्रतीहारी—(प्रविश्य) देव ! आअदो एंव एसो उवाअणहंथो परिजणेण साअं साअरो वलुणोवि ।

(देव ! आगत एव एष उपायनहस्तो परिजनैस्साकं सागरो वरुणोऽपि ।)

सर्वे—शीघ्रं [7]प्रवेशय शीघ्रं [8]प्रवेशय ।

प्रतीहारी—तथा (इति निष्क्रान्तः ।)

(ततः प्रविशति सपरिवारो वरुणः सागरश्च ।)

वरुणः—एष खलु सर्वगीर्वाणसार्वभौमः पुरुषोत्तमः ।

---

[1] सन्धानी-क. [2] कन्या वै य-क.ग. कन्यास्मे य-घ.
[3] बृवे-क. [4] णती भो-क.ग. [5] भोगस्य-क.ख. [6] कस्यैद-घ.
[7] प्रविशय-क.ग. [8] प्रविशय-क.ग

[1]येनाकारि समस्तदानवचमूविद्रावणो[2]पद्रवो
येनारक्षि सतां [3]ततिर्निरुपमप्रेमा[4]र्द्रदीव्यद्दृशा ।
येनाघौघतमोनिकृन्तन[5]विधौ मार्ताण्डबिम्बायितं
सोऽयं सम्प्रति नेत्रयोर्विषय इत्येषैव भूषा [6]श्रियः ॥ ७ ॥

सागरः—(सहर्षम् ।)

येयं मूर्तिमतीव सम्पदधुना जाता मदीये गृहे
सा कन्या [7]भुवनैकमङ्गलगुणैर्धन्यापि मान्या जनैः ।
येनासौ जगदेकवीरविरुदश्रीमाधवो [8]यद्भवो
[9]जाता पूर्वकृतैरहो [10]सुचरितैरम्लान[11]शीला[12]वृतैः ॥ ८ ॥

परिजनः—

[[13]यदियं] जगदेकचन्द्रिकातनयाभूद्दिन[14]यैकभूषणा ।
अनुरूपवरोपसङ्ग्रहादधुनाभूत्कनकाद्दतो मणिः ॥ ९ ॥

सागरः—(निर्वर्ण्य वरुणं प्रति) महाराज ! के पुनरेतस्य पार्श्ववर्तिनः कथमुपचरितव्या इति प्रष्टव्यमस्ति ।

---

[1] येन का-घ. [2] पत्रपो-क. [3] नति-क.ख. [4] र्दपीव्यद्दशा-क. र्ददिव्यद्दृशा-घ. [5] विघौ-क. [6] श्रय:-क.ख.ग. [7] भवन-क.ग. [8] यद्भवो-क. [9] जातः-घ. [10] सुचीरतै-क. [11] शील-क. [12] द्रुतैः-ख.घ. [13] यदिदं-क.ग.ख. यदीयं-घ. [14] 'यैक'-ग. नास्ति ।

**परिजनः**—सर्वे [1]उत्कण्ठिता:स्मः श्रोतव्ये ।

**वरुणः**—ज्ञातपूर्वा [2]एवैते भवता । तथाऽपि प्रकटीकरोमि । प्रत्यभिजा[3]नातु भवान् ।

यस्य त्व[4]य्यपि [5]मन्थभावमयता क्षोणीभृता जज्ञिरे
लक्ष्मीरप्सरसां गणस्सुरमणिः कल्पद्रुमाद्या अपि ।
यस्तूर्णं तव कालकूटजनितां जह्रे महादुर्दशां
सोऽयं सर्वविदां शिरोमणिरसौ [6]अभ्येति गौरीपतिः ॥१०॥

**सागरः**—ज्ञातपूर्वमहिमा खल्वयम् ।

**परिजनः**—कः खलु तस्य पार्श्वभुवं परिष्करोति सुमनोगणः ।

**वरुणः**—

अयं चेद्विघ्नेशस्सुरपतिरयं नारदमुनि—
[7]स्त्वयश्चागस्त्योऽयं रविरयमयं १कुण्डलिविभुः ।
मयश्चायं चन्द्र[8]स्त्वयमयमयं चापि धनदः
सुराणामाचार्योऽप्ययमुप[9]गतो माधवकृपाम् ॥ ११ ॥

---

१ कुण्डलिविभुः - आदिशेषः ।

---

[1] उत्कण्ठिका स्मः-क.ख. [2] एव तैर्भवता-क. [3] नाम-क. [4] य्यविम-क.ग. [5] मन्द-क.ग. मन्ध-ख. [6] अभ्येत्य-क. लभ्येत्य-ग. [7] स्त्वयचाग-क.ग.घ. [8] स्त्वयममयं-ग. त्वयमयं-क. [9] गता-क.ख.घ.

सागरः—([1]सानन्दम्)

कृतार्थं जन्मेदं फलितमधुना मा[2]मकतपः
किरीटा[3]र्हो मूर्धाऽजनि जनिकृतामात्मजनुषाम् ।
इदानीमेतन्मे [4]कुलमखिलमा[5]सीच्च सफलं
यदेतेऽप्यायाता मम गृहममी माधवयुताः ॥ १२ ॥

परिजनः—अथ किम् ।

(इति सर्वे परिक्रामन्ति ।)

माधवः—[6]अये वैनतेय ! पुरो भव, [7]य[द्व]यमपि सम्भाव[8]यामः प्रत्युद्गमनेन [9]महात्मानं वरुणं सागरं च ।

इतरे—सहजैव खलु तत्रभवतो विनयपरि[10]पाटी ।

वैनतेयः—(पुरो भूत्वा) इत इतः ।

(सर्वे माधवेन सह प्रत्युद्गच्छन्ति ।)

वैनतेयः—[11]एष खलु भगवान् [12]सागरस्सपरिवारः ।

---

[1] "सानन्दम्" क. नास्ति । [2] मकुतपः-घ. [3] 'र्हो'-घ-नास्ति । [4] कल-ग. [5] सीश्च-ग. [6] अरे-क.ग. [7] 'य'-ख.ग.घ. नास्ति । यदय-क. [8] यावः-घ. [9] महत्मा-ग. [10] पाठी-क.घ. [11] स एष-क.ग.घ. [12] "सागरः" ख. नास्ति ।

इतरे—

ऽयोऽसावसूत भुवनैकललाम[1]कन्यां
यश्चानुकूलवरदानकलाकलापः ।
य[2]स्स्वादुपेयरसक[3]ल्पयिता सुराणां
सोऽयं गुणैकनिधिरम्बुधिरक्षिमार्गे ॥ १३ ॥

माधवः—नायमर्थवादः । महान् खल्वयमम्बुधिर्वरुणश्च ।

सम[4]स्तवनसंसेव्यसर्वतोमुखसम्पदोः ।
अनयोः सममेतद्यदाशा[5]पूरणजीवनम् ॥ १४ ॥
(इति सर्वे उपसरन्ति ।)

सागरवरुणौ—[6]एषः सर्वेषां सुप[7]र्वाद्यधिभुवां अखिलसम्पत्समाजंप्रक[8]ट-
नोद्दामः प्रणामः ।

परिजनः—

अहो ! चिरेण स[9]म्प्राप्तमक्ष्णोरेतन्महोत्सवम् ।
वीक्ष्य स्फुरन्ति गात्राणि [10]दाक्षिण्यं स्वं [11]वितन्वते ॥१५॥
(इति प्रणमन्ति ।)

---

[1] कन्या-घ. [2] स्स्वानुपे-क.ग. [3] ल्प इवासु-क.ग.
[4] स्तघसं-क. [5] पूरणं-क. पूर्ण-ग. [6] "एषः"-क.ग. नास्ति ।
[7] र्वाध्यधि-ख. [8] टनो मप्र-क. [9] म्प्रप्तं दुरे-घ. [10] वाक्षिण्यं-क.
[11] वितन्यते-क.

माधवादयः—

यद्गाम्भीर्यमवार्यमेव जयति स्थैर्यं [1]तदन्यादृशं
मर्यादापरि[2]पालनं च जगतामानन्द[3]सन्दायिकम् ।
तत्सर्वं भवदीयमप्रतिहतं [4]यच्च प्रसादोच्छ्रयः
सर्वत्रापि [5]सदेति हन्त तदिदं तेषां [6]गिरां गोचरे ॥ १६ ॥

(इति हस्ताभ्यां आकृष्य परिरभ्य ताभ्यां सहोपविशन्ति ।)

(नेपथ्ये)

नृत्य[7]न्त्वप्सरसांगणाः सह महावादित्रनादामृतैः
गीयन्तां अमरीजनैस्समुचिता गीतश्रियस्सर्वतः ।
सम्भाराः कुशलोचिताश्च सवि[8]धे सज्जी[9]क्रियन्तां [10]यतः
[11]सम्प्रत्येव गुरूपदिष्ट[12]समयो वैवाहिको वर्तते ॥ १७ ॥

सर्वे—(आकर्ण्य ससम्भ्रमम्) केषामेतत् ?

सागरवरुणौ—मौहूर्तिकानाम् ।

मधूक[13]मालिका माला माधवस्य विवाहकृत् ।
स्वय[14]मेष प्रयत्नस्तु सुज[15]नाचार [16]एव सः ॥ १८ ॥

---

[1] तदान्यादृ-घ. [2] पालनैनं-क. [3] सन्दायक-क.ख.घ. [4] यस्य-ग. [5] सदेत–क.ग. [6] गिरागो–क. [7] न्त्यष्टर-क. [8] धेस्सज्जा–क. [9] कृय-ख. [10] 'यतः' घ. नास्ति । [11] सम्प्रीत्ये-क.ग.घ. [12] समये-ख. [13] मादिका-क. [14] मेव–क. [15] नादार-क. नाकार-ग. नासार-घ. [16] एष-क. येव–घ.

तदत्रैव अतिविलम्बः [1]क्रियते ।

माधवादयः—यद्रोचते तत्रभवद्भ्याम् ।

परिजनः—सर्वेऽप्यलङ्कुर्वन्तु वैवाहिकीं शालाम् ।

(तथेति ससम्भ्रमं निष्क्रान्ताः ।)

(ततः प्रविशति चारणद्वयम् ।)

एकः—अये मल्लिकाचूड ! चिरेण [2]फलितमस्माकं वैवाहिकोत्सवदर्शनेन दिक्पाल[3]काद्याकारणगतागतप्रयासैः ।

द्वितीयः—[4]सखे कुवलयापीड ! सत्यमेतत् ।

[5]सदृग्रूपस्य[6]सम्पत्योः सन्दर्शनमिहानयोः ।
रमामाधवयोः प्राप्य न मनः कस्य तुष्यति ॥ १९ ॥

(नेपथ्ये)

जितं जितमम्बुधिराजेन यत्सफला संवि[7]देतस्य ।
यश्च लोकैकवीरस्स्याद्यः कल्याणगु[8]णाकरः ।
[9]तस्मै देया मया कन्या धन्या [10]मान्या स्वयं गुणैः ॥इति॥
॥ २० ॥

---

[1] कृयन्ते-ख. [2] पतितम-क. [3] काद्याः का-क.ग.घ. [4] 'सखे' क.ग.नास्ति । [5] सादृग्दा-घ. [6] सम्पत्यो स-ग. [7] देवस्य-क.ग. [8] णाश्रयः-क.ग.घ. [9] कस्मै-घ. [10] मन्या-घ.

मल्लिकाचूडः—कस्येदम् ?

कुवलयापीडः—भगवतस्सुरगुरोरेव सुमुहूर्तदर्शिनः ।

मल्लिकाचूडः—(साश्चर्यम्)

[1]य[चि]न्तामणिपीठिकाविर[2]चनं यन्मौ[3]क्तिकाद्य[4]क्षता-
व्यापाराकलनं च विद्रुमगणैर्यत्तोरणापादनम् ।
यद्दिव्यामृतभोजनाभ्युपगमो[[5]या चा]प्सरोगीतिका
तत्सर्वं खलु सागरस्य महिमा वर्वर्ति [6]सर्वोपरि ॥ २१ ॥

कुवलयापीडः—अथ किम् ।

(नेपथ्ये)

भो ! भो ! शिवादयो नायकाः समीप[7]भाजिनो
भवन्तु भवन्तः । यदयं कृतोद्वाह[8]महामङ्गलो
माधवः पारितोषिकै[9]रा[10]तोषं युष्माकं चिकीर्षति ।

मल्लिकाचूडः—कस्येदम्?

कुवलयापीडः—वैनते[11]यस्यैतत् ।

---

[1] यश्चिन्ता-क.ख.ग.घ. [2] चननिय-क. [3] क्तिकौद्य-क.ख.
[4] क्षत-क.ख.घ. [5] यच्चाक्षरो-क. यच्चाप्सरो-ख.ग.घ. [6] सर्पोपरि-क.
[7] भाजनो-क. [8] 'महा' ख.ग.घ. नास्ति । [9] राकोषं-ग.
[10] तोषयास्माकं-क. ग. [11] यस्यैव-क.ग.घ.

(पुनर्नेपथ्ये)

परितोषप्रदानं हि पारि[1]तोषिकमत्र नः ।
पुनस्तद्दानकलना पुनरुक्तिपदं न किम् ॥ २२ ॥

मल्लिकाचूडः—[2]केषामेतत् ?

कुवलयापीडः—भगवतां शिवादीनां [3]तत्तत्कुलशेखराणां । [4]एतदामोदमेदुराणाम् ।

( पुनर्नेपथ्ये )

निखिलसुरासुरमणिमयमकुटनीराजितं पुनर्लभताम् ।
सपदि शची[5]पतिरिन्द्रस्साम्राज्यपदं विधूतदै[6]त्येन्द्रः ॥२३॥

कुवलयापीडः—[7]वैवाहिकोत्सवसुखितस्य अत्रभवतो माधवस्य पारितोषिकदानधौरन्धरी । [8]अतः श्रोतव्यमुपर्युपरि कस्मै [9]कस्मै किं किं [10]दीयत इति ।

गायकधौरेयपदे नारद एवाभिषिच्यतां विबुधैः ।
महती गानकलेयं महती वीणा च यद्गले च करे ॥ २४ ॥

---

[1] तोषक-ख. ग. [2] 'केषामेतत्'-क.ग. नास्ति । [3] तत्कुल-क. [4] आमोदमे-ग. [5] परिरि-क. [6] त्येन्द्रैः-क. ख. [7] विवाहोत्सव-ग. [8] अत्र-क.ग. [9] 'कस्मै' क. नास्ति । [10] दीय्यत-ग.

मल्लिकाचूडः—श्रुतमेतदपि ।

कुवलयापीडः—श्रोतव्यमुपर्यपि ।

(पुनर्नेपथ्ये)

वेषान्तरं जयति मे [1]यदसावशेष-
भापागणस्य वदनं पद[2]मास यस्य ।
भूषा[3]शिवस्य सु[4]जगाधिपनामघोषः
[5]शेषो दधातु शयनीयपदं ममैषः ॥२५॥

मल्लिकाचूडः—अहो ! धन्यताप्यनन्त[6]स्या[7]नन्तता ।

कुवलयापीडः—अथ किम् ।

(नेपथ्ये)

विन्ध्यस्तम्भनविख्यात[8]विबुधानन्दनव्रतः ।
अगस्त्यो लभतां नित्यं अखिलर्ष्युप[9]देशताम् ॥२६॥

मल्लिकाचूडः—अये ! महान् अनुग्रहः ।

कुवलयापीडः—[10]पात्रं खल्वेतावतो मुनीन्द्रः ।

---

[1] यदवेषभा-क. यदशेषभा-ग. [2] मानसस्य-क.ग. मासचस्य-घ. [3] शिरस्य-क.ग. [4] जगोधि-क.ख. [5] शेषा-क. [6] स्याप्यन-ख. [7] नन्ता-क. ग. घ. [8] विधुना-क. [9] देश्यता-ग. [10] पात्र:-ख.ग.घ.

(नेपथ्ये)

यः कालकू[1]टगिल[2]नाद्दतसर्वलोको
यन्मन्दराद्रिकलनेन जजान लक्ष्मीः ।
सोऽयं निरस्तविधिशीर्षविशेषधामा
प्रायस्समस्तभजनीयप[3]देशिता स्यात् ॥२७॥

मल्लिकाचूडः—तदेव वितीर्णमेतस्य यदात्मा[4]भि[न्नस्यौपायि]कम् ।

कुवलयापीडः-सत्यमुक्तं भवता ।

वेषान्तरायातविधुन्तुदोरुमाया[5]गतिख्याप[6]नजात[7]मैत्रौ ।
भानुर्ग्रहाणामपि शीतभा[8]नुभानां च नाथत्वपदं लभेताम्
॥ २८ ॥

मल्लिकाचूडः—उ[9]चिता खल्वनु[10]ग्रहरीतिः ।स्वनेत्र[11]स्थानीययोरेतयोः ।

कुवलयापीडः—सखे ! सम्यगालोचितमेतत् ।

(नेपथ्ये)

अविघ्नदानैरमृतादिवस्तुजनिक्रियायामिह [12]यस्सहायः ।
स चैकदन्तोऽभ्यवहारकेल्याः पिचण्डिलत्वं पुनरुक्तमेतु
॥ २९ ॥

---

[1] टगल-क.ग. [2] नावित-क.ग.घ. [3] देशता-क.ग.घ.
[4] भिनस्योपैकम्-क.ख.ग.घ. [5] गते ख्या-क.ग. [6] नजत-घ. [7] मैत्रा-ग.
[8] नुभानां-क. [9] चितःख-ख. [10] ग्रहारी-घ. ग्रहरीतिः-क.ग.
[11] स्थानयोरे-ख. [12] नस्स-क.ग.

[1]मल्लिकाचूडः—अतीवानुरूपमेतत् ।

कुवलयापीडः—(विहस्य) जन[2]वादोऽयं योग्यं योग्येन सम्बध्यत इति । युक्त एव ।

(नेपथ्ये)

यो विश्वकर्माधिकशिल्प[3]लीलां
सन्दर्श[4]यन्नत्र ततान मैत्रीम् ।
सोऽयं[5]मयः स्वानुभवैक[6]तानः
स्यादीशिता दानवदैत्यपङ्क्तेः ॥ ३० ॥

मल्लिकाचूडः—अहो ! [7]दानवदैत्यरिपोरपि [8]विभोरेतस्मिन्नपि महाननुग्रह इति ।

कुवलयापीडः—पन्था एव एष गुणप्रियाणां महताम् ।

(नेपथ्ये)

यद्वैदग्ध्यादयं यत्नो दुग्धाब्धिमथनादिकः ।
करणं मङ्गल[9]स्यास्य गुरुस्स[10]र्वार्यतामियात् ॥ ३१ ॥

मल्लिकाचूडः—प्रागेव दत्तमपि पुनरुक्त्या दृढीकृतमाचार्यपदमेतस्य ।

---

[1] "मल्लिकाचूडः-अतीवानुरूपमेतत्" क. नास्ति । [2] वाचोऽयं-ग. [3] शीलां-घ. [4] यन्मित्र-ग. [5] मया-क. [6] तान-क.ग.घ. [7] दानदै-क. [8] भोरतस्मिन्नपि-क, वोरेतस्मिन्म-ग. [9] स्याद्य गु-ख. [10] र्वार्थता-क,ख.

कुवलयापीडः—निपुणं खलु मन्त्रितं भवता ।

(नेपथ्ये)

वैवाहिकोत्सवविधानमनोज्ञतायां
भावं निधाय कृतसर्वनिधानदानः ।
[1]यस्सार्थभावमनयद्धनदाभिधां स्वां
सोऽयं जयत्यनुपमान[2]धनः कुबेरः ॥ ३२ ॥

मल्लिकाचूडः—चिरेण खलु नाम सदृशं [3]कर्मैतस्य ।

कुवलयापीडः—चिरसम्भृतिः खलु धनस्य जायते
सफलप्रदानस[4]मयौचितीवशात् ।
सफला [5]तदैव बहुदानचातुरी
जलदस्य मौक्ति[6]ककलेप्यने[7]हसि ॥ ३३ ॥

(नेपथ्ये)

किं बहुना

यथा यथा भवत्यत्र यस्य यस्याभिवाञ्छितम् ।
तथा तथा भवत्येव दैवतप्रेमकारिणाम् ॥ ३४ ॥

मल्लिकाचूडः—[8]सखे ! महाननुग्रहसमयोऽयं माधवस्य । तदावाभ्यां [9]अपि पार्श्ववर्तिभ्यां भवितव्यम् ।

---

[1] यस्यार्थ-क.ख.ग. [2] धरः-ख.घ. [3] करै तस्य-क,ग,
[4] मयोचि-क.ख.ग. [5] तथैव-ख, [6] क प्यने-क. क रेऽप्य-ग,
[7] हसी-क, [8] 'सखे !'घ. नास्ति । [9] 'अपि' क.ग. नास्ति ।

कुवलयापीडः—यद्रोचते प्रियसुहृदे ।

(इति निष्क्रान्तौ ।)

(ततः प्रविशति [1]सवधूको माध[2]वश्शिवादयो वैन[3]तेयस्सगणो-वरुणश्च ।)

शिवादयः—दिष्ट्या सलक्ष्मीकं देवमभिवीक्ष्य मोदामहे ।
[4]तथैवेनमपि लोकोत्तरजामातृभावमुदितं वरुणं च ।

वरुणः—सत्यमेतत् ।

क्व जडप्रकृतिर्जनः क्व चासा-
वजहत्सत्वगुणस्त्रिलोकनाथः ।
क्व च दानकलाप्रतिग्रहः [5]क्वे-
त्ययते विस्मयमस्मदीयचेतः ॥ ३५ ॥

माधवः—

स्वानां न [6]भवतां वाणी [7]स्वातन्त्रयति मा[8]मम्रुम् ।
[9]सुखं [10]यन्मानसे वर्ते शुकवन्मणिपञ्जरे ॥ ३६ ॥

वैतालिकः—(सहर्षम्)

पुनर्लक्ष्मीम[11]नुप्राप्य पुनरुक्तमयं सुखम् ।
यदेष दृश्यते देवः तदेव तपसां फलम् ॥ ३७ ॥

---

[1] वधू-क,ग. [2] वश्च शि-ग. [3] तेयो व-ख. तेयस्सागरो-ग. [4] तदैवे-क,ग. [5] केत्य-ख. [6] भवता-घ. [7] स्वतन्त्र-ख,घ. स्यतन्त्र-ग. [8] मयम्-क. मभम्-ग. [9] सुखा-क,ग. [10] यान्मा-घ. [11] नुवाप्त पु-ग.

रमा—( स्वगतम् ) अह्महे तावं तोविदंविरहसंदावो खणमंतेण एव-णिउंतो आसि । जो खिल खणंवि कंपसदं कलेदुं णिउणो ।
(अहो ! तावान् तद्विरहसन्तापो क्षणमात्रेणैव निवृत्त आसीत् । यः किल क्षणमपि कल्पशतं कर्तुं निपुणः । )

( इति कटाक्षैर्माधवं अभिषिञ्चति । )

माधवः —(प्रियामभिलक्ष्य सहर्षवैलक्ष्यम् ) ( स्वगतम् )

अनिद्राणा[1]पेक्षैरचिरहृदयादाननिपुणै-
रलङ्कुर्वा[2]णैर्द्रागसितमणिमालाभिरभितः ।
क[3]टाक्षैरेणाक्षीकवचमकरोद्यद्वपुषि मे
तदेवालं[4]मन्ये विरहप[5]रितापोप[6]शमने ॥ ३८ ॥

( प्रकाशम् ) किमिदानीं कर्तव्यमाशंसन्ते भवन्तः ?

[7]सर्वे—किमवशिष्यते पूर्णकामस्य भवतः ।

तथा हि—

[8]जितस्त[9]त्त.दृग्यो विरहपरितापो[10]मदनज-
स्त्रिलो[11]कीवीरत्वं दनुजविजयैःख्यापितमभूत् ।

---

[1] पेक्षते-क. पेक्ष्यैर-घ. [2] णैर्धामसि-घ. [3] टाक्षेणा-ग. [4] मन्यं-क. [5] 'रि' ग. नास्ति । [6] शमनम्-क. [7] "सर्वे- किमवशिष्यते पूर्णकामस्य भवतः" क.ग. नास्ति । [8] हित-घ. [9] त्तादृस्पो वि-क, त्तादृश्यो वि-ख. [10] मवन-क.ग. [11] कीमिस्त्वं-क. कीधीरत्वं-ग.

सुखं लब्धा दुग्धाम्बुधितनुभवा च स्वय[1]मियं
परित्यक्तो दूरं प्रणयकलहश्चापि युवयोः ॥ ३९ ॥

[2]तदद्य नावशिष्यते मनोर[3]थावशेषः । तथा[4]प्येतदेव केवल-
माशास्यम् ।

असा[5]वङ्क[6]ग[ता] [[7]तु] [8]स्थादनपायतया [9]तव ।
[10]जयत्वयश्च सम्बन्धश्चन्द्रिकाचन्द्रयोरिव ॥ ४० ॥

(रमां प्रति )

यःकल्याणगुणाकर[11]स्त्रिजगतीवीरा[12]ग्रणी वर्तते
[13]यस्मै देयमपत्यरत्नमिति [14]यत्तोयेशितु[15]र्वाञ्छितम् ।
तत्पूर्यां कृतकृत्यमप्य[16]नुमितः प्रायः [17]कृतार्थं कृथाः
तत्तादृ[18]क्कृ[प्र]ते[19]मानसानुसरणैः पातिव्रतीसम्पदा ॥ ४१ ॥

रमा—(सलज्जम् ) ( स्वगतम् ) लज्जाए संकुचंदि मह अंगाणि । जं संवेहिं देवेहिं णादं पणअकलहं पवंतणं तंस णिवंतणं अ किंणु कलेमि । ( प्रकाशम् ) जं अवंतेहिं आणंतं । ( स्वगतम् ) ( लज्जया सङ्कुचन्ति ममाङ्गानि । यत्सर्वै र्देवैर्ज्ञातं प्रणयकलह-प्रवर्तनं तस्य निवर्तनं च । किन्नु करोमि । (प्रकाशम्) यद्भवद्भिः

---

[1] मितीयं-क. [2] तवाद्य-ग. [3] थाशेषः-क. थावेशः-ख.ग.
[4] प्येवदे-घ. [5] वन्तग-घ. [6] गते क.ख.ग.घ.
[7] त-क.ग. त्व-घ. [8] स्यावन-क.ग. [9] तदाव-क. तदा-घ.
[10] जयत्वं-क.ग. [11] स्त्रिजती-क. [12] ग्रणिर्वर्तते-क.ग. [13] तस्मै-ख.घ.
[14] युक्तो ये-क. [15] वांभितु-क. [16] मुमतः-क. [17] कृतार्थः-क.
कृतार्थाः-ग. [18] कृकृति-क. कृप्रति-ग. [19] मान्नसूदनु-क. मानुसानु-ग.

आज्ञप्तम् । ) ( इति शृङ्गारलज्जां निरूपयन्ती प्रणमति । )

शिवादयो वरुणश्च—

यल्लीलालव एव सर्वसुमनस्साम्राज्यलाभोत्सवो
[1][यस्यास्सा] करुणाकटाक्षकणिका दारिद्र्यवि[2]द्राविणी ।
[3]तस्यास्ते जगदेकमङ्गलमणीदीपायितायाः पुनः
किं[4]वाऽऽशास्यमिति प्रणामसमये[5] मज्जेम लज्जाम्बुधौ ॥४२॥

वैतालिकः—( ऊर्ध्वमवलोक्य ) अनुजानातु भवान् यथा पुरस्स्थान-गमनाय । यदेष [6]यामातिगतया [7]ललाटंतपस्तपनो भविष्यति । वयमपि श्वेतद्वीपवासिनां आ[8]मोदमुपकल्पयिष्यामः ।

शिवादयः—जात एव सर्वेषां जगतामानन्दः, न हि कुमुदामोदसंशयश्चन्द्रप्रसादसद्भावेऽपि । तथापि तनयाविरहदुर्म[9]नायमानमेनं क्षिप्रमा[10]नन्दयतु भगवान् ।

वैनतेयः—युज्यत एतत् ।

रमा—( स्वगतम् ) किंणु खु आसंसिदं वंखदि तादोत्ति आसंका हिअअंस । ( प्रकाशम् ) (वरुणं प्रत्यपवार्य ) ताद ! जं किंवि अहिलसिदं हवे तं कहेहि पूरइस्सदि भंटा ।

( स्वगतम् ) (किन्नु खल्वाशंसितं वक्ष्यति तात ! इत्याशङ्का हृदयस्य । (प्रकाशम् ) (वरुणं प्रत्यपवार्य ) तात ! यत्किमप्यभिलषितं भवेत्तत्कथयस्व पूरयिष्यति भर्ता । )

---

[1] यस्येयं-क.ख.ग.घ. [2] द्रावणा-क. द्रावणी-ग. [3] तस्तास्ते-क.घ. [4] वा शस्य-ख. [5] मज्जेव-क.ग. [6] यामातितग-क. यामार्धातिग-घ. [7] ललाटस्तलस्त-क. [8] मोपमु-घ. [9] नयामा-घ. [10] नन्दयितुं-क. नन्दयितु-ग.

माधवः—किं ते भूयः प्रियमुपहरामि ।

वरुणः—दलि[1]ता दानवमाया द्रावितमासीद्बलं तेषाम् ।
निष्प्रत्यूहविलासैर्निर्वृत्तोऽजनि महोत्सवो जगताम् ।। ४३ ।।

अपि च

प्रतिज्ञेयं [2]पूर्णा मम च [3]कृतिजामातृकलना-
द्वियो[4]गप्रक्षोभस्सपदि युवयोः शान्ति[5]मयितः ।
त्रिलोकी त्वद्वीक्षाजनित[6]मिह नेत्रोत्सवमगात् ।
स्वयं चेयं कन्या मम सपदि धन्या त्वदयनात् ।। ४४ ।।

तथापीदमस्तु ।

(भरतवाक्यम्)

[7]भूमिस्सदा भव[8]तु सम्भृतसस्यजाता
नाथा भवन्तु निजधर्मरताः पृथिव्याः ।
साहित्यसम्पदभिवृ[9]द्धि[मु]पात्त[10]लोकाः
सर्वान् बुधान् [11]सुखयतु क्षपितान्त[12]रायाः ।। ४५ ।।

( इति निष्क्रान्ताः सर्वे । )

।। तृतीयोऽङ्कः समाप्तः ।।

।। सम्पूर्णश्चायं समवकारः ।।

---

[1] ता हि नव-क.ग. [2] पुर्ना-क. [3] मत्कृ-क. [4] गःप्र-क.ख.ग. [5] म इतः-ग. [6] मिहि ने-क. [7] भूमिस्तदा-क.ग. [8] तु संस्तृतस-ख. तु सम्प्रति स-ग. तु सन्तत स-क. [9] द्धिरुपा-क.ख.ग.घ. [10] लोका-क.ख.घ. [11] सुखतु-क. [12] राया-क.घ- राय-घ.

# पद्यानुक्रमणिका


| अ | | | अङ्क. | श्लो. | पृ. |
|---|---|---|---|---|---|
| अणिमादिसिद्धिरपि | .... | .... | 2 | 13 | 40 |
| अणुसलइ सुलसमाजं | .... | .... | 2 | 20 | 44 |
| अनिद्राणापेक्षैरचिर | .... | .... | 3 | 38 | 69 |
| अनुरागवतोरेष | .... | .... | 1 | 38 | 21 |
| अन्धकारहरणे यदि दीपः | .... | .... | 1 | 7 | 5 |
| अपि नाम प्रियासङ्गम | .... | .... | 1 | 31 | 18 |
| अभयवचनदायी | .... | .... | 2 | 30 | 50 |
| अमी शिवागस्त्यमयेन्द्र | .... | .... | 2 | 25 | 47 |
| अमृतकलशहस्तं | .... | .... | 2 | 29 | 50 |
| अमृतासारसंस्पर्शैः | .... | .... | 1 | 32 | 18 |
| अयमयं कुसुमाञ्जलि | .... | .... | 1 | 2 | 2 |
| अयि प्रिये ! तवैवेय | .... | .... | 1 | 12 | 8 |
| अयं चेद्विघ्नेशस्सुरपति | .... | .... | 3 | 11 | 57 |
| अयं प्रियं मित्रमलीकदृष्टेः | .... | .... | 2 | 22 | 46 |
| अविघ्नदानैरमृतादि | .... | .... | 3 | 29 | 65 |
| अस्य चैत्ररथं नाम | .... | .... | 2 | 23 | 46 |
| असावङ्कगता तु | .... | .... | 3 | 40 | 70 |
| अहो ! चिरेण सम्प्राप्त | .... | .... | 3 | 15 | 59 |

| आ | | | अङ्क. | श्लो. | पु. |
|---|---|---|---|---|---|
| आकर्ण्य वार्तामसरेश्वराणां | .... | .... | 1 | 43 | 24 |
| आगतिर्यत्र कुत्रापि | .... | .... | 1 | 13 | 9 |
| आनङ्गोन्मदलालसैः | .... | .... | 3 | 2 | 53 |
| आहारोऽपि न रोचते | .... | .... | 1 | 35 | 19 |
| **इ** | | | | | |
| इनं कमलिनी यद्वदिन्दुं | .... | .... | 2 | 5 | 33 |
| **उ** | | | | | |
| उत्कण्ठाभरसम्पर्कादु | .... | .... | 1 | 18 | 12 |
| **ए** | | | | | |
| एषो खु दुंगकुविदंखिकोणं | .... | .... | 2 | 24 | 46 |
| **क** | | | | | |
| कमलिन्या यथा भास्वान् | .... | .... | 1 | 15 | 11 |
| कल्प्यन्तां हरिदन्तदन्ति | .... | .... | 3 | 5 | 54 |
| कविः कृती कृतिरपि | .... | .... | 1 | 10 | 7 |
| कृत्वा वा सुरसाहाय्यं | .... | .... | 1 | 33 | 19 |
| कृतार्थं जन्मेदं फलित | .... | .... | 3 | 12 | 58 |
| क्व जडप्रकृतिर्जनः | .... | .... | 3 | 35 | 68 |
| **ग** | | | | | |
| गत्वा पुरं च वरुणस्य | .... | .... | 1 | 24 | 15 |
| गत्वा स्वयंवरमहोत्सव | .... | .... | 1 | 48 | 26 |
| गायकधौरेयपदे | .... | .... | 3 | 24 | 63 |

| | | | अङ्क. | श्लो. | पु. |
|---|---|---|---|---|---|
| गरुन्मरुदनीकिनी | .... | .... | 1 | 21 | 14 |
| **च** | | | | | |
| चिरसम्भृतिः खलु | .... | .... | 3 | 33 | 67 |
| **ज** | | | | | |
| जयतु जनककन्या | .... | .... | 1 | 1 | 1 |
| जानाति तामनुदितान्य | .... | .... | 1 | 39 | 21 |
| जामाता जगदेकवीरबिरुद | .... | .... | 3 | 6 | 55 |
| जितस्तत्ताद्दग्यो | .... | .... | 3 | 39 | 69 |
| **ण** | | | | | |
| णं चवदि मुहंस सिरी | .... | .... | 2 | 31 | 51 |
| णिंदयकिद हिंसाणं | .... | .... | 2 | 12 | 39 |
| **त** | | | | | |
| तपनस्तपसां रविर्यथा | .... | .... | 1 | 23 | 15 |
| तथा तथा प्रतिज्ञाय | .... | .... | 1 | 4 | 4 |
| ताड्यन्ते निबिडं महोत्सव | .... | .... | 1 | 51 | 29 |
| तावदेवारतिश्चित्ततापो | .... | .... | 1 | 40 | 21 |
| **द** | | | | | |
| दलन्नीलाम्भोज | .... | .... | 2 | 28 | 50 |
| दलिता दानवमाया | .... | .... | 3 | 43 | 72 |
| **ध** | | | | | |
| धर्मो विग्रहवानेष | .... | .... | 2 | 18 | 43 |

| न | | | अङ्क. | श्लो. | पु. |
|---|---|---|---|---|---|
| निर्ऋतिरेष विजयते | .... | .... | 2 | 19 | 44 |
| निखिलसुरासुरमणि | .... | .... | 3 | 23 | 63 |
| निद्रामुपेत्य तरुमूलतलेषु | .... | .... | 1 | 29 | 17 |
| नृत्यन्त्वप्सरसाङ्गणाः | .... | .... | 3 | 17 | 60 |
| नैसर्गिकी यदि प्रीतिरन्योन्यं | .... | .... | 1 | 41 | 22 |
| **प** | | | | | |
| पङ्कजवनश्रिताः | .... | .... | 1 | 30 | 18 |
| पतंतचामीअरमंजुलंबरो | .... | .... | 2 | 26 | 47 |
| परितोषप्रदानं हि | .... | .... | 3 | 22 | 63 |
| पादुअंवजणपाणभाअणं | .... | .... | 2 | 14 | 40 |
| पुनर्लक्ष्मीमनुप्राप्य | .... | .... | 3 | 37 | 68 |
| पूजा या विधिरुद्रमुख्य | .... | .... | 1 | 20 | 13 |
| प्रौढप्रतापपरिपोषिणि | .... | .... | 1 | 27 | 17 |
| प्रणयकलहाद्याता | .... | .... | 1 | 17 | 12 |
| प्रणयकोपवशेन | .... | .... | 1 | 37 | 20 |
| प्रणयात्कलहं प्राप्य | .... | .... | 1 | 14 | 11 |
| प्रतिज्ञेयं पूर्णा मम च | .... | .... | 3 | 44 | 72 |
| **भ** | | | | | |
| भूमिस्सदाभवतु | .... | .... | 3 | 45 | 72 |
| भो भो भुज! प्रशममेहि | .... | .... | 1 | 25 | 16 |

| म | | | अङ्क. | श्लो. | पु. |
|---|---|---|---|---|---|
| मञ्जावलीषु मदनोपम | .... | .... | 2 | 10 | 38 |
| मदनमदनरूपं माधवं | .... | .... | 2 | 27 | 48 |
| मधूकमालिका माला | .... | .... | 3 | 18 | 60 |
| माधवीमधुसम्बन्धो | .... | .... | 3 | 3 | 53 |
| मुखमण्डलेऽपि न पुरेव | .... | .... | 3 | 4 | 53 |
| **य** | | | | | |
| यच्चक्रं दिविजारिवृन्द | .... | .... | 1 | 36 | 20 |
| यच्चिन्तामणिपीठिकाविरचनं | .... | .... | 3 | 21 | 62 |
| यदनुज्झितसार | .... | .... | 1 | 34 | 19 |
| यदा सामाद्युपायानां | .... | .... | 1 | 22 | 14 |
| यद्गाम्भीर्यमवार्य | .... | .... | 3 | 16 | 60 |
| यदियं जगदेकचन्द्रिका | .... | .... | 3 | 9 | 56 |
| यदीक्षितं नेक्षितमेव | .... | .... | 2 | 1 | 30 |
| यदुपासनया परं | .... | .... | 2 | 21 | 45 |
| यद्वैदग्ध्यादयं यत्नो | .... | .... | 3 | 31 | 66 |
| यद्दोर्दण्डविजृम्भि | .... | .... | 2 | 15 | 41 |
| यथा यथा भवत्यत्र यस्य | .... | .... | 3 | 34 | 67 |
| यथैव सर्वभूतानामी | .... | .... | 1 | 47 | 26 |
| यल्लीलालव एव | .... | .... | 3 | 42 | 71 |
| यश्च लोकैकवीरस्याद्य: | .... | .... | 1 | 42 | 23 |
| यश्च लोकैकवीरस्याद्य: | .... | .... | 1 | 49 | 27 |
| यश्च लोकैकवीरस्याद्य: | .... | .... | 3 | 20 | 16 |

| | | | अङ्क. | श्लो. | पृ. |
|---|---|---|---|---|---|
| यस्तेजोनिधिरित्यतीव | .... | .... | 2 | 17 | 42 |
| यस्य त्वय्यपिमन्थभाव | .... | .... | 3 | 10 | 57 |
| यस्याङ्गणे श्रीमदनीकिनीनां | .... | .... | 1 | 8 | 6 |
| या नो मुञ्चति मामनन्य | .... | .... | 1 | 46 | 26 |
| या सर्वमोहजननैक | .... | .... | 1 | 45 | 25 |
| येनाकारि समस्तदानव | .... | .... | 3 | 7 | 56 |
| येयं मूर्तिमतीव सम्पद्धुना | .... | .... | 3 | 8 | 56 |
| ये वेङ्कयार्यसामीप्यमालम्व्य | .... | .... | 1 | 9 | 6 |
| येषामीपत्करमिव | .... | .... | 2 | 11 | 39 |
| योऽसावसूत भुवनैक | .... | .... | 3 | 13 | 59 |
| योऽसौ मन्मथमन्मथ | .... | .... | 2 | 4 | 32 |
| योऽसौ वेङ्कसुधीचन्द्र | .... | .... | 1 | 6 | 4 |
| यो विश्वकर्माधिक | .... | .... | 3 | 30 | 66 |
| यं कन्या भुवि भर्तारं | .... | .... | 1 | 11 | 8 |
| यः कल्याणगुणाकर | .... | .... | 3 | 41 | 70 |
| यः कालकूटगिलना | .... | .... | 3 | 27 | 65 |
| **र** | | | | | |
| रत्नाकरसुताया यद्रत्ना | .... | .... | 2 | 3 | 31 |
| **ल** | | | | | |
| लक्ष्यन्तेऽगिरयो | .... | .... | 1 | 50 | 28 |

| व | | | अङ्क. | श्लो. | पु. |
|---|---|---|---|---|---|
| वपुर्जगद्भूषयति स्वयं | .... | .... | 2 | 2 | 30 |
| वितत्य वैष्णवीं मायां | .... | .... | 2 | 6 | 33 |
| विद्यातिहृद्यापि न चानवद्या | .... | .... | 1 | 3 | 3 |
| विधानमस्याः खलु | .... | .... | 2 | 8 | 35 |
| विनयापचारकलना | .... | .... | 1 | 26 | 16 |
| विन्ध्यस्तम्भनविख्यात | .... | .... | 3 | 26 | 64 |
| विबुधदानवमुख्य | .... | .... | 1 | 5 | 4 |
| वेषान्तरायातविधुन्तु | .... | ... | 3 | 28 | 65 |
| वेषान्तरं जयति मे | .... | .... | 3 | 25 | 64 |
| वैवाहिकोत्सवविधान | .... | .... | 3 | 32 | 67 |
| **श** | | | | | |
| शार्दूलकृत्तिकृतकञ्चुक | .... | .... | 1 | 44 | 24 |
| **स** | | | | | |
| सखि ! ते विधृतिर्विभूषणानां | .... | .... | 2 | 9 | 35 |
| सदृग्दाम्पत्यसम्पत्योः | .... | .... | 3 | 19 | 61 |
| सन्तापमुग्रतर | .... | .... | 1 | 28 | 17 |
| समस्तघनसंसेव्य | .... | .... | 3 | 14 | 59 |
| सा मय्यस्त्यनपाय | .... | .... | 1 | 19 | 13 |
| सुरभूरुह एव पुष्पवाटी | .... | .... | 2 | 16 | 41 |
| सुरवासवमौनिसिद्ध | .... | .... | 2 | 7 | 34 |
| स्रोतोऽसि चन्दनरसस्य | .... | .... | 3 | 1 | 52 |

| | | | अङ्क. | श्लो. | पृ. |
|---|---|---|---|---|---|
| स्वानां न भवतां वाणी | ... | .... | 3 | 36 | 68 |
| **ह** | | | | | |
| हरिश्चन्द्रो नारदश्च | .... | .... | 1 | 16 | 11 |

# शुद्धिपत्रिका

| अशुद्धः | शुद्धः | पुटम् | पङ्क्तिः |
| --- | --- | --- | --- |
| तपसाम् एष | तपसामेष | 3 | 4 |
| तामुउप | तां उप | 7 | 9 |
| रसी तनया | रसीतनया | 10 | 6 |
| मुपाह | मुपह | 14 | 7 |
| स्वयव | स्वयंव | 15 | 1 |
| श्च्युत | श्च्चुत | 17 | 9 |
| वनतेयः | वैनतेयः | 23 | 11 |
| एंति अउं | एंतिअउं | 28 | 1 |
| महसं | महंसं | 36 | 13 |
| र्गमवे | र्गमावे | 45 | 5 |
| विगुरु | विर्गुरु | 47 | 8 |
| अमीशिवा | अमी शिवा | 47 | 6 |
| क्कान्ता | कान्ता | 49 | 12 |
| नेपेथ्ये | नेपथ्ये | 50 | 10 |
| तेयंः प्र | तेयं प्र | 54 | 3 |
| जामता | जामाता | 55 | 22 |
| ऽयोसा | योऽसा | 59 | 1 |
| क्रिं बहुना | किं बहुना | 67 | 13 |
| गणो-व | गणो व | 68 | 3 |